( १२८९ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २ )

## ३०६२ आतो लोप इटि च ॥६।४।६४॥

( लोपाधिकरणम् )

( इड्ग्रहणाक्षेपभाष्यम् )

**इड्ग्रहणं किमर्थम् ?**

**( प्रदीपः ) इड्ग्रहणं किमर्थमिति ।** इह 'अचि-क्ङिति-आर्धधातुके' इति त्रयाणां प्रकृतत्वाद्विशेषणविशेष्यभावे च कामचारात् तेषामन्यतमेनानुभूतविशेषणेनाननुभूतविशेषणेन वा इटः समुच्चयसंभवादनेकपक्षसम्भवः ॥

**तत्र** यदि तावद्विशेषणसम्बन्धात् प्रागेवाचेट् समुच्चीयते, अङ्गाधिकाराक्षिप्तप्रत्ययविशेषणाच्चाजादौ प्रत्यय इति विज्ञायते। तत्रेड्ग्रहणमनजाद्यर्थं विज्ञायते, अजादेरिटोऽजादिना प्रत्ययेन समुच्चयाभावात् । तदा 'क्ङिदार्धधातुके' अजादेरेव विशेषणे व्यवतिष्ठेते, नेटः, क्ङित्वासम्भवादार्धधातुकत्वव्यभिचाराभावाच्च । ततश्च दासीयेत्यादावाल्लोपप्रसङ्गः ॥

**अथाजादेः** प्रत्ययस्य क्ङिदार्धधातुकाभ्यां विशेषणाभ्यां प्राक् सम्बन्धः, पश्चादिटा समुच्चयः, तदाऽयमर्थः-अजादौ क्ङित्यार्धधातुके इटि चाकारलोप इति, तदेड्ग्रहणमनजाद्यर्थम-क्ङिदर्थमनार्धधातुकार्थं च भवतीति 'दासीय-पपिथ-व्यत्सरे'इति सर्वत्रेटि आल्लोपः प्राप्नोति ॥

**अथ** क्ङिताऽननुभूतविशेषणेनेट् समुच्चीयते, तदा 'अच्यार्धधातुके' इति विशेषणद्वयमविशेषात् द्वावपि क्ङिदिटावुपनिपततीति अक्ङिदर्थमेवेड्ग्रहणं विज्ञायते । तेन पपिथेत्यादावाल्लोपो भवति, दासीय व्यत्सर इत्यनजादौ सार्वधातुके च न भवति । अनुभूतविशेषणद्वयसम्बन्धेन तु क्ङितेटः समुच्चये पूर्ववत्सर्वत्रैवाल्लोपप्रसङ्गः ॥

**अथ** त्वार्धधातुकेनाननुभूतविशेषणेनेटः समुच्चयः-आर्धधातुके चेटि च'इति, तदा सार्वधातुकार्थमिड्ग्रहणं विज्ञायत इति व्यत्सर इत्यादावाल्लोपप्रसङ्गः । तदाऽचि क्ङितीति विशेषणद्वयमार्धधातुकस्यैव स्यात् न त्विटः, सार्वधातुकस्येटो ङित्वाजादित्वाव्यभिचारात् । अनुभूतविशेषणेनार्धधातुकेनेटः समुच्चये सर्वत्रैवाल्लोपप्रसङ्गः । तदेवमनेकपक्षसम्भवात् **प्रश्नः ॥**

**( उद्योतः )** इह बहूनां पक्षाणां संभवात्तेषामेकैकस्य परिग्रहे प्रयोजनभेद इड्ग्रहणस्य भवतीति प्रयोजनप्रश्नद्वारेण कतमः पक्षोऽत्र गृह्यत इति प्रश्नपर्यवसानं दर्शयितुमाह—**इहाचीति ॥ अन्यतमेन**-अचा, ङिता, आर्धधातुकेन वा ॥

तत्राननुभूतविशेषणेन केनचिदिटः समुच्चये इतरद्वयं यथासंभवं विशेषणत्वेन योज्यमित्याह—**तत्र यदीति ॥ अजादेरिट इति ।** भेदाधिष्ठानत्वात्समुच्चयस्येति भावः । अजादेरिटोऽजादिप्रत्ययान्तर्भावादिति तात्पर्यम् । इट्शब्देन चागमस्य प्रत्ययस्य सामान्येन ग्रहणमिति बोध्यम् ॥ **दासीयेति ।** दाधातोराशीर्लिङि आत्मनेपदोत्तमपुरुषे सीयुटि च हलादिरिट् संभवति । तस्य ङित्त्वं नास्त्येव, आर्द्धधातुकत्वं चाव्यभिचारीति भावः ॥

अथानुभूतविशेषणेनाजादिप्रत्ययेनेट्समुच्चय इतीमं पक्षं दर्शयति—**अथाजादेरिति ॥ व्यत्सरे इति ।** रा दाने, लङि 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदोत्तमपुरुषैकवचनमिट् । अदादित्वाच्छपो लुक् । तत्र मध्यमे इष्टो लोपः, आद्यन्तयोस्त्वनिष्टः प्राप्नोतीति दोषः ।

तदा **सार्वधातुकार्थ**मित्येतदुपपादयति—**तदाऽचीति ॥**

( ६५६४ इड्ग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इड्ग्रहणमक्ङिदर्थम् ॥ * ॥

**( भाष्यम् ) इड्ग्रहणं क्रियते, अक्ङिति लोपो यथा स्यात् । पपिथ, तस्थिथेति ॥**

**( प्रदीपः )** इतरः क्ङिताऽननुभूतविशेषणेनेटः समुच्चयं, पश्चात् द्वयोरपि विशेषणद्वयसम्बन्धमाश्रित्याह—**इड्ग्रहणमक्ङिदर्थमिति ॥**

**( उद्योतः )** एवं तृतीयः पक्षो लक्ष्यानुरोधात्सिद्धान्तितो भाष्ये । तदाह—**इतरः क्ङितेति ॥**

( उपसंख्यानभाष्यम् )

**सार्वधातुके चादीत्यार्धधातुकाधिकारादुपसंख्यानं कर्तव्यम् । इषमूर्जमहमित आदीति ॥**

**( प्रदीपः ) आदीति ।** दाञः केवलादाङ्पूर्वाद्वा 'छन्दसि लुङ्लङ्लिटः' इति लुङ्लङोरन्यतरः । केचिदत्र पदकाराः 'आ-अदि-'इत्यवगृह्णन्ति । केचिच्चैकपद्यं मन्यन्ते तेषामाडागम इति पक्षः । तत्र लुङि लेः 'मन्त्रे घस-'इति लुक् । लङि तु छान्दसत्वाच्छपो लुक् । श्लौ वा सति द्विर्वचनप्रकरणे 'छन्दसि च'इति वक्तव्यमिति द्विर्वचनाभावः । सिद्धान्ते त्वार्धधातुकत्वाच्छबभावः ॥

**( उद्योतः )** 'केवलादाङ्पूर्वाद्वा'इत्युपपादयति—**आ अदीति ।** आदीत्युत्तमपुरुषैकवचन इति रूपम् । तत्रावग्रहवादिनामादानमत्रार्थः । अन्येषां दानमर्थः । 'लुङ्लङोरन्यतरः' इत्येतद्विशदयति—**तत्र लुङीति ॥**

१ 'अथेड्ग्र' इति च. छ. झ. पाठः ॥

२ 'प्रागेव चेद्' इति क. पाठः ॥

३ 'विशेषणाच्चाजादौ' इति क. पाठः ॥

४ 'तदेड्ग्रहण' इति ङ. पाठः ॥

५ **समुच्चयाभावादिति ।** दासीयेत्यत्रेटः सीयुटि प्रत्ययस्येटोऽजादित्वाभावादजादिना प्रत्ययेन समुच्चयाभावादित्यर्थः ॥

६ 'नेटः हलादेरिटः क्ङित्वास' इति क. ङ. झ. पाठः ॥

७ 'आतो लोपः' इति झ. पाठः ॥

८ अजादेरिट इति । इडागमस्याजादिप्रत्ययान्तर्भावः, इट्प्रत्ययस्य च सीयुडाद्यागमेऽजादिप्रत्ययानन्तर्भाव इत्यर्थः ॥

९ **मध्यमे**—पपिथेत्यत्र । आद्यन्तयोः—दासीय—व्यत्सर इत्यत्र ॥

१० एवं तृतीयः पक्ष इति । 'अथ क्ङिताऽननुभूतविशेषणेनेट् समुच्चीयते' इति पक्षः ॥

११ वार्तिकमेतत् च. छ. झ. ट. ङ. पुस्तकेषु दृश्यते ॥

१२ 'लुङि च्लेर्मन्त्रे' इति क. ङ. झ. पाठः ॥

१३ 'छन्दसि वा इति' इति ङ. झ. पाठः ॥

( उपसंख्यानसमर्थकभाष्यम् )

**ननु च यथैव 'क्ङिति'इति वर्तमाने इट्ग्रहणमक्ङिदर्थम्, एवं 'आर्धधातुके' इत्यपि वर्तमाने इट्ग्रहणं सार्वधातुकार्थं भविष्यति ।**

**न सिध्यति ।**

**किं कारणम् ?**

**न हि क्ङिता अज् विशेष्यते-अचि भवति, कतरस्मिन् ? क्ङितीति ।**

**किं तर्हि ?**

**अचा क्ङिद्विशेष्यते-क्ङिति भवति, कतरस्मिन् ? अचीति ।**

**किं पुनः कारणमचा क्ङिद्विशेष्यते ?**

**यथा इडप्यज्ग्रहणेन विशेष्येत ।**

**अस्ति चेदानीं क्वचिदिडनजादिः, यदर्थो विधिः स्यात् ।**

**अस्तीत्याह । दासीय, धासीय-इति ॥**

( प्रदीपः ) दासीयेति । इटः सीयुटि तस्य तद्भक्तत्वादजादित्वाभावः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**तत्तर्हि उपसंख्यानं कर्तव्यम् ?**

**न कर्तव्यम् । आर्धधातुकत्वात् सिद्धम् ।**

**कथमार्धधातुकत्वम् ?**

**उभयथा छन्दसीति वचनात् । अन्येऽपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ॥**

---

( १२९० विधिसूत्रम् ॥ ६ । ४ । ३ आ. ३ )

## ३०६४ घुमास्थागापाजहातिसां हलि ॥ ६ । ४ । ६६ ॥

( ६५६५ प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ईत्वे वकारप्रतिषेधो घृतं घृतपावान इति दर्शनात् ॥ * ॥

( भाष्यम् ) **ईत्वे वकारप्रतिषेधो वक्तव्यः ।**

**किं प्रयोजनम् ?**

**घृतं घृतपावान इति दर्शनात् ।**

**इह मा भूत्—घृतं घृतपावानः पिबत वसां वसपावानः पिबत-इति ॥**

( प्रदीपः ) **ईत्व इति** । वकारस्य निमित्तभावेन प्रतिषेधः-**वकारप्रतिषेधः** । वकारादावीत्वं न भवतीत्यर्थः ॥

**घृतपावान इति** । 'आतो मनिन्-'इति क्वनिप् ॥ **वसपावान इति** । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति वसाशब्दस्य ह्रस्वः ॥

( उद्योतः ) वकारस्य साक्षात्प्रतिषेधेन संबन्धायोगादाह—वकारस्येति ॥

**ह्रस्व इति** । यद्यपि पदमञ्जर्यां क्वचित्पुस्तकेषु सांप्रतं[1] पठ्यमानं, माध्यन्दिनशाखायां च दीर्घः पठ्यते; तथापि क्वचिच्छाखायां ह्रस्वपाठोऽन्वेषणीयः ॥

( उपसंख्यानाक्षेपभाष्यम् )

**यदि तर्हि वकारे प्रतिषेध उच्यते कथं धीवरी पीवरी[2] ?**

( ६५६६ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ धीवरी पीवरीति चोक्तम् ॥ * ॥

( भाष्यम् ) **किमुक्तम् ?**

**नैतदीत्वम् ।**

**किं तर्हि ?**

**ध्याप्योरेतत्सम्प्रसारणमिति ॥**

( प्रदीपः ) **धीवरीति चोक्तमिति** । 'जनसनखनां सञ्झलोः'इत्यत्रोक्तम् ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**स तर्हि प्रतिषेधो वक्तव्यः ?**

**न वक्तव्यः । वनिबेष भविष्यति, न क्वनिबिति ॥**

( प्रदीपः ) **वनिबेष इति** । क्वनिपु छन्दसि दृष्टानुविधानान्न भविष्यति । भाषायामपि 'अन्येभ्योऽपि दृश्यते'[3] इति दृशिग्रहणात् प्रयोगानुसरणार्थात् प्रयोगाभावात्पादिभ्यो नास्ति क्वनिबिति भाष्यकारस्याभिप्रायः । तत्र वार्तिकारम्भो ज्यायानित्याहुः । 'स्थः क च'[4]इति क्विपि संस्था इत्यत्रेत्वस्यादर्शनात् । भाष्यकारमतेन त्वीत्वं प्राप्नोति प्रत्ययलक्षणेन, यथा—अतृणेडित्यत्रेमागमः ॥

( उद्योतः ) ननु क्वनिप्यनिष्टरूपनिवृत्तये प्रतिषेध आवश्यकोऽत आह—क्वनिह्विति[5] ॥ **भाष्यकारमतेन त्विति** । प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वे 'हलादौ क्ङिति'इति वर्णस्याप्राधान्येनाश्रयणादिति भावः ॥ **अत्रेदं चिन्त्यम्**-प्रत्ययलक्षणसूत्रं नियमार्थमिति भाष्यमतेऽप्राप्तेः । वस्तुतस्तु क्विप्यपीत्वं भवत्येव, सूत्रे हलीत्यस्याऽनजादिपरत्वात् । अत एव 'ध्यायतेः संप्रसारणम्'इति वार्तिके 'धीध्यायतेर्दधातेर्वा'इति भाष्यं सङ्गच्छते । 'शंस्थाः'इत्यत्र 'अम्बाम्ब-'इतिसूत्रस्थसव्येष्ठा इत्यत्र च विजेव । 'चेन क्विप्'इति तत्सूत्रस्थभाष्ये क्विप्पदेन सादृश्याद्विजेवोच्यत इति **चिन्त्योऽयं** कैयट इति । एवं च 'ध्याप्योः संप्रसारणम्'इत्येकदेशयुक्तिरिति बोध्यम्[6] । [ वस्तुतस्तु

---

१ 'साम्प्रतं पठ्यमानमाध्यन्दिन' इति झ. पाठ. ॥

२ 'पीवरीति' इति च. छ. पाठः ॥

३ 'दृश्यन्ते' इति ङ. ट. झ पाठः ॥

४ 'स्थः क चेति चात्क्विपि' इति च. पाठः ॥

५ घ. ज. पुस्तकयोः 'क्वचित्त्विति' इति प्रतीकं दृश्यते, तेन प्रदीपपाठः 'क्वचित्तु छन्दसि' इत्यप्यनुमीयते ॥

६ 'बोध्यमिति केचित्' इति ङ. पाठः । झ. ङ. पुस्तकयोः [ ] एतच्चिह्नगतः पाठः ॥

वार्त्तिकप्रत्याख्यानयोः फलैक्यायेद्दशेभ्यः क्विपोऽनभिधानमिति 'दधातेर्वा'इति भाष्यमेकदेश्युक्तिः-इतीदमाद्यन्तांशरूपमयुक्तमेव । न च विनिगमनाविरहाद्वैपरीत्यमेव स्यादिति वाच्यम्, अस्य सूत्रद्वयस्योपपत्तिसहितत्वात्तस्य च विपरीतत्वादिति बोध्यम् ।] घियाविल्यादावीत्त्वस्येयङ्यसिद्धत्वं तु न, व्याश्रयत्वात्-इति 'जनसन-' इति सूत्रे भाष्य उक्तम् ॥

(१२९१ निषेधसूत्रम् ॥ ६ । ४ । ३ आ. ४)

## ३०७२ न माङ्योगे ॥ ६ । ४ । ७४ ॥

( अडाट्प्रतिषेधाधिकरणम् )

( प्रतिषेधप्रतियोगिजिज्ञासाभाष्यम् )

**कस्यायं प्रतिषेधः ?**

**आटः प्राप्नोति ॥**

**अटोऽपि त्विष्यते । तत्तर्ह्यटो ग्रहणं कर्तव्यम् ॥**

(प्रदीपः) **कस्यायमिति** । यदि द्वयोरप्यडाटोरिहानुवृत्त्या प्रतिषेधस्ततोऽजादीनामडपि प्राप्नोति । **अथा**नन्तर्यादाटः प्रतिषेधस्तथा सति माङ्योगेऽनिष्यमाणोऽपि अट् प्राप्नोतीति मत्वा **प्रश्नः** ॥

स एवानन्तर्यमाश्रित्याह—**आटः प्राप्नोतीति** ॥

(उद्द्योतः) **यदि द्वयोरपीति** । समुदायापेक्षायां 'अनन्तरस्य-'इति परिभाषाऽनुपस्थानादिति भावः ॥ **अडपीति** । मध्येऽपि संबन्धादिति भावः ॥

**स एवेति** । न तु सिद्धान्तवादी । **तत्तर्ह्यटो ग्रहणं कर्तव्य**मित्यन्तं चोदकवचनमिति भावः । व्यवहितत्वादनुवृत्त्ययोगेनाड्ग्रहणं कर्तव्यमेवेति तात्पर्यम् ॥

( अट्साधकभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते ।**

**क प्रकृतम् ?**

**'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (६।४।७१) इति ॥**

( प्रदीपः ) इतरः समुदायापेक्षायां दोषाभावेऽपि स्वरितत्वादधिकारेऽपि दोषप्रतिविधानसम्भवादाह—**न कर्तव्यमिति** ॥

( उद्द्योतः ) प्रकृतानुवृत्त्या सिद्धमिति वदतः सिद्धान्तिन आशयमाह—**इतर इति** ॥ द्विविधा ह्यनुवृत्तिः-लौकिकी, शास्त्रीया च । तत्राद्ये परिहारः—**समुदायेति** ॥ अन्त्य आह—**स्वरितत्वादिति** ॥

( अडनुवर्तनाक्षेपभाष्यम् )

**यदि तदनुवर्तते, 'आडजादीनाम्' ( ७२ ) अट्चेत्यडपि प्राप्नोति ॥**

( प्रदीपः ) **अडपि प्राप्नोतीति** । अडाटोर्युगपदेकागम्यपेक्षयाऽऽदित्वं न सम्भवतीति पर्यायप्रसङ्गः, यथा—लेटोऽडाटौ । ततः पक्षेऽटि सति 'ऐक्षिष्ट'इत्यादि न सिध्यति, एक्षिष्टेत्यावनिष्टं प्राप्नोति ॥

( उद्द्योतः ) 'एकागम्यपेक्षयाऽऽदित्वं'इति पाठः । 'एकागम्यपेक्षायामादित्वं'इति पाठे **एकागमिनोऽपेक्षायां**-सवन्धे तदपेक्षमादित्वं न संभवतीति कथञ्चिद्व्याख्येयम् ॥

( समाधानभाष्यम् )

**अस्तु, अटि कृते पुनराट् भविष्यति ॥**

( प्रदीपः ) इतरस्तु विकल्पेनाप्यडाटोः प्रवृत्तौ द्रव्ये पदार्थे कृतेऽप्यटि शब्दान्तरत्वान्निमित्तसद्भावाच्चाटा भवितव्यमिति मत्वाऽऽह—**अस्त्विति** ॥

( उद्द्योतः ) **द्रव्ये पदार्थ इति** । तत्र हि प्रतिलक्ष्यं लक्षणभेदाच्छब्दान्तरत्वे सत्याटा भवितव्यमित्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**इहापि अटि कृते पुनराट् प्राप्नोति—अकार्षीत्, अहार्षीत् ॥**

( प्रदीपः ) इतरो यद्येकस्मिन्नागमे कृते परस्य प्रवृत्तिस्ततो हलादीनामप्यटि कृते आट्प्रसङ्ग इति मत्वाऽऽह-**इहापीति** । ननु चाटि कर्तव्येऽटोऽसिद्धत्वादजादित्वाभावः । यद्यपि शास्त्रापेक्षयाऽसिद्धत्वं तथापि प्रयोगरूपमाश्रित्य चोद्यते, यथोक्तं-'मार्थोदीदाद्यर्थानाम्'इति । परिहारान्तरसद्भावाद्वाऽसिद्धत्वं नोक्तम् ॥

( उद्द्योतः ) **यथोक्तमिति** । 'अदसो मात्'इत्यत्र । तत्र हीत्वादीनामसिद्धत्वात्प्रगृह्यत्वाभावेनायादिप्रसङ्गे नोदितेऽयं परिहारः । मार्थः-स्थानी 'म'शब्देनोक्तः । ईदूदर्थश्च-ईदूच्छब्देन । न चास्यां कल्पनायामसिद्धत्वं भवति, शास्त्रीये ह्यसिद्धत्वमिति तद्भावः । प्रकृतेऽपि 'अजादीनाम्'इत्यस्य 'अजादिप्रयोगरूपाणाम्' इत्यर्थे प्रयोगरूपं न शास्त्रीयमिति तात्पर्यम् ॥ ननु मा भूत्तत्रासिद्धत्वम्, इह तु 'अजादेरङ्गस्य'इति शास्त्रीयमेव रूपं गृह्यत इत्यसिद्धत्वं भवत्येवेत्यत आह—**परिहारान्तरेति** ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**अड्वचनान्न भविष्यति ॥**

( प्रदीपः ) **अड्वचनादिति** । यदि हलादीनामप्यटि कृते आट् स्यात्तदा लुङ्लङ्लृङ्क्ष्वाडागममेव विदध्यात् ॥

( पुनः प्रत्याक्षेपभाष्यम् )

**इहापि तर्हि अड्वचनान्न स्यात्-ऐहिष्ट, ऐक्षिष्ट ॥**

( प्रदीपः ) **इहापि तर्हीति** । यद्यटि कृते आड् न भवति, ततोऽत्रापि न स्यात् ॥

( समाधानभाष्यम् )

**आड्वचनाद्भविष्यति ॥**

( प्रदीपः ) **आड्वचनादिति** । यद्याण्न स्यात्तद्विधानमनर्थकं स्यादित्यर्थः ॥ ननु विकल्पितत्वादडाटोरडभावे आट्

१ 'द्वयोरडाटो' इति अ. पाठः ॥

२ 'गम्यपेक्षायामादित्वं' इति ड. ठ. झ. पाठः ॥

३ 'इहापि तर्ह्यटि' इति च. छ. पाठः ॥

कर्तव्य इति अटि सति न प्राप्नोति । नैष दोषः । उत्तरार्थेन नान्तरीयकोपस्थानेन प्रवृत्तेनाप्यटा बाधितुमाटोऽशक्यत्वात् । अथवा सन्दिग्धप्रवृत्तिरडागमोऽसन्दिग्धप्रवृत्तिनाऽऽटा बाध्यते इत्येष वाक्यार्थः । यथाऽन्यत्रोक्तम्–अन्यवचनाच्चकाराकरणात् प्रकृतस्याप्यपवादो यथोत्सर्गेण प्रसक्तस्य–इति ॥

( उद्द्योतः ) सामर्थ्यं विघटयति—ननु विकल्पितेति ॥ सामर्थ्यात्पर्याये विकल्पः फलतीत्याशयेनोक्तम्—उत्तरार्थेनेति । एवं चाटो दुर्बलत्वेन बाधकत्वायोग इति भावः ॥ ननु यद्यड्[1] दुर्बलस्तदा बलवताऽऽटा तस्य बाधापत्तावड्वृत्तिर्दुर्लभेत्यत आह—अथवेति । उत्तरार्थत्वादेव संदिग्धप्रवृत्तिकत्वं तस्य । एवं चाटोऽप्रवृत्तिरेवेति भाष्याशय इति भावः ॥ अन्यत्र–'इको गुणवृद्धी' इत्यादौ ॥

( आक्षेपभाष्यम् )

इहापि तर्हि आड्वचनात् प्राप्नोति—अकार्षीत्, अहार्षीत् ॥

( प्रदीपः ) इतरस्त्वगृहीताभिप्रायो विशेषाभावं मत्वाऽऽह—इहापि तर्हीति ॥

( समाधानभाष्यम् )

अकृतेऽटि योऽजादिरित्येवमेतद्विज्ञास्यते ।

किं वक्तव्यमेतत् ?

न हि ।

कथमनुच्यमानं गंस्यते ?

अड्वचनसामर्थ्यात् । यदि हि कृतेऽटि योऽजादिस्तत्र स्यात्, अड्वचनमनर्थकं स्यात् ॥

( प्रदीपः ) अकृतेऽटीति । अजादिग्रहणसामर्थ्यात् कृते ह्यटि सर्वस्याजादित्वादडाटोश्च भेदेन विधानसामर्थ्याद्विषयविभागावसायः–हलादीनामडेव, अजादीनां कृतेऽकृते वाऽटि आट्–इति ॥

( उद्द्योतः ) ननु 'अकृतेऽटि' इति विशेषलाभः कथमत आह—अजादिग्रहणेति ॥ भेदेनेति । अन्यथाऽऽटमेव विदध्यादिति भावः ॥

( प्रकारान्तरेण समाधानभाष्यम् )

अथवा–उपदेश इति वर्तते ।

अथवा–आर्धधातुक इति वर्तते ।

अथवा–लुङ्लङिति[2] द्विलकारको निर्देशः। लुङादिषु लकारादिषु योऽजादिरिति ॥

( प्रदीपः ) अथवेति । उपदेशे[3] यान्यजादीनि तेषामाड् भवति । न च करोतिरुपदेशेऽजादिरिति आड्भावः ॥

अथवाऽऽर्धधातुक इति वर्तत इति । तेनार्धधातुकसंज्ञकलकारोत्पत्तिकाले[4] योऽजादिस्तस्याड् भवति ॥

( उद्द्योतः ) न च करोतिरिति । उपलक्षणमेतत् ॥

( समाधानाक्षेपभाष्यम् )

सर्वथा–ऐज्यत–औप्यत इति न सिध्यति ।

एवं तर्हि—

(प्रदीपः) सर्वथेति । करोत्यादिवद्यजादीनामटि सत्याऽभावादित्यर्थः । 'असिद्धवदत्राभात्' इत्यत्रासिद्धत्वप्रत्याख्यानाय सर्वे एवामी प्रकारा उक्ताः, इह तु स्थित एवासिद्धत्व एषामुपन्यासः ॥

( उद्द्योतः ) करोत्यादिवदिति । हलादीनामडेवेति व्यवस्थापनात् ॥ स्थित एवेति । प्रतिपत्तिलाघवार्थमारब्धेऽपि सूत्र इत्यर्थः । 'आटीत्'इत्युपलक्षणं 'आटत्'इत्यादिलङोऽपि ॥

( समाधाने श्लोकवार्तिकम् )

## अजादीनामटा सिद्धम्

( भाष्यम् ) अजादीनामटैव सिद्धं नार्थ आटा ॥

( वार्तिकाक्षेपभाष्यम् )

एवं तर्हि वृद्ध्यर्थमाड् वक्तव्यः ॥

( समाधाने श्लोकवार्तिकम् )

## वृद्ध्यर्थमिति चेदटः ।

( भाष्यम् ) अटो वृद्धिं वक्ष्यामि ॥

( वार्तिकावतरणभाष्यम् )

यदि तर्ह्यटो वृद्धिरित्युच्यते—

( समाधानाक्षेपे श्लोकवार्तिकम् )

## अस्वपो हसतीत्यत्र

( भाष्यम् ) अस्वपो हसतीत्यत्रापि रोरुत्वे कृते वृद्धिः प्राप्नोति ॥

( प्रदीपः ) अस्वप इति । स्वपेर्लङ्, सिप् । 'अड्गार्ग्यगालवयोः' इत्यट् । शब्लुक् । सकारस्य रुत्वं 'हशि च'इत्युत्वम् । तत्राद्गुणं बाधित्वा वृद्धिः प्राप्नोति ॥

( समाधाने श्लोकवार्तिकम् )

## धातौ[5] वृद्धिमटः स्मरेत् ॥

( भाष्यम् ) धातावटो वृद्धिं वक्ष्यामि ॥

तत्तर्हि धातुग्रहणं कर्तव्यम् ।

न कर्तव्यम् । योगविभागः करिष्यते–'अटः', अचि वृद्धिर्भवति । ततः–'उपसर्गादृति–' वृद्धिर्भवति । ततः–'धातौ' इत्युभयोः शेषः ॥

---

[1] 'यद्यड् इह दुर्बलः' इति झ. पाठः ॥

[2] 'लुङ्लङ्लृङ्क्ष्वडिति' इति ढ. पाठः । 'लुङ्लङ्लृङ्क्ष्वडिति' इति झ. पाठः ।

[3] उपदेशे–लुङाद्युपदेशे । तेन नामधातौ 'औङ्कारीयत्' इत्यादौ न दोषः ॥

[4] उत्पत्तीति । तेन लावस्थायामडागमेऽपि न आट्, उत्पत्तिकालेऽजादित्वाभावात् । एवं द्विलकारनिर्देशपक्षेऽपि बोध्यम् ॥

[5] 'धातौ धातावि' इति च. छ. पाठः ॥

( वार्तिकावतरणभाष्यम् )

इह तर्हि—आटीत्, आशीत्—'अतो गुणे' (६।१।९७) इति पररूपं प्राप्नोति ॥

( प्रदीपः ) आटीदिति । 'नेटि'इति वृद्धौ प्रतिषिद्धायां पर[1]त्वाद्वृद्धिं बाधित्वा पररूपं प्राप्नोति ॥

( समाधाने श्लोकवार्तिकम् )

**पररूपं गुणे नाटः**

( भाष्यम् ) आटो नेति वक्ष्यामि ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् ॥

( प्रदीपः ) पररूपं गुणेनाट इति । अट[2] उत्तरे गुणे पररूपं नेति वक्तव्यमित्यर्थः ॥

(प्रकारान्तरेण समाधानश्लोकवार्तिकम् ॥)

**ओमाङोरुसि तत्समम् ।**

( भाष्यम् ) यद्यप्येतदुच्यते, अथ वै तर्हि उस्योमङ्क्ष्वाटः प्रतिषेधश्चोदितः, स न वक्तव्यो भवति ॥

(प्रदीपः) ओमाङोरुसि तत्सममिति । औङ्कारीयत्–औढीयत्–औस्रीयदित्यत्र वृद्धिं बाधित्वा परत्वात् 'ओमाङोश्च' 'उस्यपदान्तात्'इति पररूपं प्राप्नोति तस्य प्रतिषेधो वक्तव्य इत्युक्तम् । यदा तु पररूपविधौ 'नाटः' इत्युच्यते तदोस्योमाङ्क्ष्वाटः पररूपप्रतिषेधो न वक्तव्य इति तुल्यमेतद्भवति, न तु गौरवप्रसङ्गः ॥

( उद्योतः ) न वक्तव्यमित्यस्य–'गौरवावहमेतद्वक्तव्यं न, यत ओमाङोरुसि यत् प्रतिषेधवचनं तेन तुल्यमेतद्वचनं'इति योजनां दर्शयन्व्याचष्टे–औङ्कारीयदिति । 'अटश्च'इति पुनर्विधानार्थेन चेन तस्यैवास्यापि सिद्धिरिति भावः ॥ न तु गौरवप्रसङ्ग इति । 'आङजादीनाम्'इत्यस्याकरणात् । 'अटश्च'इत्यत्र मात्राहानेर्लाघवमप्यस्ति ॥

( आक्षेपभाष्यम् )

छन्दोऽर्थं तर्ह्याट् वक्तव्यः–आरैगु कृष्णा, त्रित एनमायुनक्, ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ॥

( समाधाने श्लोकवार्तिकम् )

**छन्दोऽर्थं बहुलं दीर्घः**

( भाष्यम् ) छन्दसि दीर्घो बहुलं दृश्यते । तद्यथा–पूरुषः, नारक इति ॥

( आक्षेपभाष्यम् )

एवं तर्हि—आयन्, आसन्–इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वाद्वृद्धिर्न प्राप्नोति ॥

( समाधाने श्लोकवार्तिकम् )

**इणस्त्योरन्तरङ्गतः ॥**

( भाष्यम् ) अन्तरङ्गत्वात् वृद्धिर्भविष्यति । तस्मान्नार्थ आड्ग्रहणेन ॥

(प्रदीपः) अन्तरङ्गत्वादिति । यण्लोपौ हि बहिरङ्गौ । वृद्धौ कृतायां 'इणो यण्' 'एः'इति योगविभागाश्रयणात् यणोऽभावः । रूपा[3]श्रयत्वादन्तादिवद्भावो नास्ति,ताद्रूप्यानतिदेशात् । 'श्नसोरल्लोपः'इति तपरकरणाल्लोपाभावः । एतच्च 'वार्णादाङ्गं बलीयः' इत्यनाश्रित्योक्तम् । तदाश्रये हि वृद्धिं बाधित्वा यण्लोपौ स्याताम् । अटा सिद्धे आड्वचनमेव ज्ञापकमन्ये वर्णयन्ति–'भवत्येषा परिभाषा वार्णादाङ्गं बलीयः' इति । तस्यां हि सत्यां यण्लोपयोर्वृद्धिं बाधित्वा प्रवृत्तयोः 'आयन्–आसन्'इति न स्यादित्याड्विधीयते ॥

( उद्योतः ) बहिरङ्गाविति । प्रत्ययाश्रयत्वात् ॥ यणोऽभाव इति । ततश्चायादेशे रूपं सिद्धमिति भावः ॥ ताद्रूप्येति । अन्तादिवर्णमात्रवृत्तिधर्मस्यानतिदेशादित्यर्थः ॥ अनाश्रित्येति । लक्ष्यानुसारादनाश्रयणम्, अयुगपत्प्राप्तेर्वा । इडस्तु 'अध्यैयाताम्'इत्यादेर्लोकेऽनभिधानम्, पक्षयोः फलभेदापत्तेरित्याहुः । निरूपितं चेदं 'इङ्'धातौ शब्देन्दुशेखरे ॥ अन्य इति । अत्रारुचिबीजं तु भाष्यविरोधः ॥

( संग्रहः )

**अजादीनामटा सिद्धं**
**वृद्ध्यर्थमिति चेदटः ।**
**अस्वपो हसतीत्यत्र**
**धातौ वृद्धिमटः स्मरेत् ॥ १ ॥**
**पररूपं गुणे नाट**
**ओमाङोरुसि तत्समम् ।**
**छन्दोऽर्थं बहुलं दीर्घं**
**इणस्त्योरन्तरङ्गतः ॥ २ ॥**

---

( १२९२ विधिसूत्रम् ॥ ६ । ४ । ३ आ. ५ )

## ३०७४ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ६ । ४ । ७६ ॥

( इयङाद्यधिकरणम् )

( ६५६७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलम् ॥ * ॥**

( भाष्यम् ) इयङादिप्रकरणे तन्वादीनां छन्दसि

---

१ परत्वाद्वृद्धिमिति । 'आटश्च' इत्यनेन प्राप्ताऽऽबाधित्वेत्यर्थः ॥
२ नाट इत्यस्यार्थं दर्शयति—अट इति ॥

३ रूपाश्रयत्वादिति । एरिति योगविभागादिकाररूपाश्रयत्वादित्यर्थः ॥

**बहुलमुपसंख्यानं कर्तव्यम् । तन्वं पुषेम । तनुवं पुषेम । विष्वं पश्य । विषुवं पश्य । स्वर्गं लोकम् । सुवर्गं लोकम् । त्र्यम्बकं यजामहे । त्रियम्बकं यजामहे ॥**

( प्रदीपः ) **तन्वमिति** । 'वा छन्दसि'इत्यधिकारादस्मि पूर्वत्वाभावात् यणादेशः ॥ **तनुवमिति** । अधातुत्वादप्राप्त उवङ् विधीयते ॥ **विष्वमिति** । विसूते-इति 'सत्सूद्विष-'इति क्विप् । अत्र नित्यं 'ओः सुपि'इति यणि प्राप्ते पक्षे उवङ् विधीयते ॥ **सुवर्गमिति** । अधातुत्वादनङ्गत्वाच्चाप्राप्त उवङ् विधीयते ॥

( उद्योतः ) ननूवङ्भावपक्षे पूर्वरूपं स्यादत आह—**वा छन्दसीति** । पूर्वसवर्णदीर्घोऽप्यत एव न । तत्र बह्वृचानां यणादेशेन पाठः । यजुर्वेदिनां-उवङ्विशिष्ट इति बोध्यम् ॥ **विसूत इति** । क्विपि 'गतिकारकोपपदानां-'इति सुबुत्पत्तेः पूर्वं समासेऽपदादित्वात् 'आदेशप्रत्यययोः'इति षत्वं 'विष्वं-विषुवम्'इत्यत्रेति बोध्यम् ॥

---

( १२९३ विधिसूत्रम् ॥ ६ । ४ । ३ आ. ६ )

## ३०८० एरनेकाचोऽसंयोगपूर्वस्य ॥ ६ । ४ । ८२ ॥

( सूत्रार्थदर्शकभाष्यम् )

**इह कस्मान्न भवति-ब्राह्मणस्य नियौ, ब्राह्मणस्य नियः ?**

**अङ्गाधिकारात् । अङ्गस्येति वर्तते ॥**

**एवमपि-परमनियौ, परमनिय इत्यत्रापि प्राप्नोति ।**

**गतिकारकपूर्वस्यैवेष्यते ॥**

( प्रदीपः ) **ब्राह्मणस्य नियाविति** । 'अन्येभ्योऽपि दृश्यते' इति ताच्छील्यादिषु नियः क्विप् । ततः कर्मणा सम्बन्धः । सत्यपि वा पूर्वं कर्मणा संबन्धे परत्वात्सोपपदं 'सत्सूद्विष-' इति क्विपं बाधित्वा ताच्छीलिकः क्विब्भवति ॥

**गतिकारकपूर्वस्येति** । परमशब्दोऽत्र न गतिर्न च कारकम् । किन्तर्हि ? उत्तरपदार्थस्य समानाधिकरणं विशेषणम् ॥

(उद्योतः) ननु 'सत्सूद्विष-'इति सोपपदे क्विपि उपपदसमासे ब्राह्मणनियाविलेव स्यादत आह—**अन्येभ्योऽपीति** ॥ **परत्वादिति** । ताच्छील्याद्यविवक्षायां सोपपदस्यावकाशः । निरुपपदस्य धात्वन्तरमवकाश इति भावः ॥

**गतिकारकपूर्वस्यैवेति**—नियमः, सपूर्वपदस्य चेद्गतिकारकपूर्वस्यैवेष्यते न तु गतिकारकपूर्वभिन्नस्येष्यत इत्यर्थः । तेन निन्यतुरित्यादि सिध्यति । एतेन यण्विध्येकवाक्यतापन्नत्वान्नायं नियम इत्यपास्तम् । एवकारस्यानन्वयापत्तेश्च । इयं भाष्यकृत इष्टिः ॥

( ६५६८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥*॥ यणादेशः स्वरपदपूर्वोपधस्य च ॥*॥**

( भाष्यम् ) **यणादेशः स्वरपूर्वोपधस्य पदपूर्वोपधस्येति वक्तव्यम् । स्वरपूर्वा च यस्योपधा पदपूर्वा च ।**

**स्वरपूर्वा-निन्यतुः, निन्युः ।**

**पदपूर्वा-उन्न्यौ, उन्न्यः । उद्ध्यौ, उद्ध्यः ।**

**उभयपूर्वा-ग्रामण्यौ, ग्रामण्यः । सेनान्यौ, सेनान्य इति ॥**

( उद्योतः ) इदानीं वार्तिकं व्याचष्टे—**स्वरपदेत्यादि** ॥

( ६५६९ उपसंख्यानप्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ असंयोगपूर्वे ह्यनिष्टप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **असंयोगपूर्वस्येत्युच्यमाने, अनिष्टं प्रसज्येत-उन्न्यौ, उन्न्यः । उद्ध्यौ, उद्ध्यः ।**

**असंयोगपूर्वस्येति प्रतिषेधः प्रसज्येत ॥**

( प्रदीपः ) **उद्ध्याविति** । भावे कर्तरि वाऽत्र क्विप् । ईकारः संयोगपूर्वः ॥

( उद्योतः ) **भावे इति** । संपदादित्वात् । **कर्तरि**-'क्विप्च' इत्यनेन । पश्चाद्विशेषणसमासः । 'पदपूर्व'इत्यत्र पदशब्देन धात्ववयवत्वानधिकरणस्य ग्रहो बोध्यः । तेनोन्नीशब्दादाचारक्विबन्तात्कर्तरि क्विपि न यण् । अत एव प्रत्याख्यानेन न विरोधः । तस्यानभिधानमेवेत्यन्ये । एतद्वचनारम्भेऽपि परमनियावित्यादावतिप्रसङ्गवारणाय भाष्यकारेष्टिरावश्यकी । तेन स्वरपूर्वग्रहणं प्रत्याख्यातप्रायमेव ॥

( वार्तिकार्थसाधकभाष्यम् )

**तत्तर्हि वक्तव्यम् ।**

**न वक्तव्यम् । 'धातोः'इति वर्तते, धातुना संयोगं विशेषयिष्यामः-धातोर्यः संयोगस्तत्पूर्वस्य नेति ।**

**उपसर्जनं वै संयोगः, न चोपसर्जनस्य विशेषणमस्ति ।**

---

१ 'विसूते-इति, अत्र सत्सू' इति ङ. पाठः ॥

२ 'पूर्वस्येष्यते' इति छ. पाठः ॥

३ 'दिषु निरुपपदात् नियः' इति ङ. पाठः । 'नियो निरुपपदात्क्विप्' इति झ. च. पाठः ॥

४ विप्रतिषेधमुपपादयति—ताच्छील्याद्येति ॥

५ 'स्वरपदपूर्वोपधस्य च यणादेशः' इति झ. पुस्तके वार्तिकपाठ ॥

६ 'स्वरपूर्वा यस्योपधा' इति ङ. पाठः । 'स्वरपूर्वा च यस्योपधा पदपूर्वा च' इत्यस्य छ, पुस्तके पाठ एव न ॥

७ 'स्वरपूर्वोपधस्य' इति छ. पाठः ॥

८ 'पदपूर्वोपधस्य' इति छ. पाठः ॥

९ 'उभयकृतम्' इति छ. पाठः ॥

१० 'ईकारः' इति झ. ढ. पाठः ॥

११ 'वर्तते, तत्र धातुना' इति च. छ. झ. पाठः ॥

१२ उपसर्जनं वा इति । असंयोगपूर्वस्येत्यतः प्रतीयमानस्यान्यपदार्थस्योपसर्जनं संयोग इत्यर्थः । न विशेषणस्य विशेषणान्तरयोगोऽस्तीति न्यायेन विशेषणयोगो नेत्यर्थः ॥

धातोरित्यनुवर्तनसामर्थ्यादुपसर्जनस्यापि विशेषणं भविष्यति ।

अस्त्यन्यत् धातोरित्यनुवृत्तौ प्रयोजनम् ।

किम् ?

इवर्णं विशेष्यते ।

नैतदस्ति प्रयोजनम् । यद्व्यधातोरिवर्णं, भवितव्यमेव तस्य यणादेशेन 'इको यणचि' (६।१।७७) इति ॥

( प्रदीपः ) **धातोरिति** । अविद्यमानधात्ववयवसंयोगपूर्वस्य यणित्यर्थः ॥

**उपसर्जनमिति** । अन्यपदार्थं प्रति ॥ **न चोपसर्जनस्येति** । सम्बन्धिशब्दादन्यदुपसर्जनं पदान्तरवाच्येनार्थेन सम्बन्धं नोपैतीत्यर्थः ॥

**अस्त्यन्यदिति** । गुणप्रधानसन्निधौ प्रधानस्य सत्यार्थित्वे विशेषणसम्बन्धेन भाव्यम्, अनर्थित्वे प्रधानस्य गुणो विशेषणेन सम्बध्यते ॥

**यद्व्यधातोरिति** । यथा—कुमार्यौ—इति । ननु 'मणी' 'पाणी' इत्यादावधातोः पूर्वसवर्णदीर्घबाधनार्थो यण् मा भूदिति धातुनेवर्णस्य विशेषणे प्रयोजनमस्ति । एवं तर्हि-इयङ्बाधनार्थत्वाद्यणादेशस्याधातोरियङोऽप्रसङ्गादधातुनिवृत्त्यर्था धातुग्रहणस्यानुवृत्तिर्न भवति ॥

( उद्योतः ) पदपूर्वग्रहणमपि प्रत्याख्यातुमाह—(भाष्ये)—तत्तर्हीत्यादि ॥

**सम्बन्धिशब्दादिति**—गमकस्योपलक्षणम् ॥

**गुणप्रधानेति** । इवर्णं प्रति प्राधान्येनान्वयसंभवे संयोगविशेषणत्वमन्याय्यमिति वक्तुं युक्तम् । भाष्यस्यापि 'इवर्णं धातुं प्रति विशेष्यते' इत्यर्थः ॥

**पूर्वसवर्णदीर्घबाधनार्थं इति** । स तु 'ई-ऊ' इत्यादौ चरितार्थः ॥ **इयङ्बाधनार्थत्वादिति** । 'उत्सर्गसमानदेशा अपवादाः' इति न्यायादिति भावः । न चायं न्यायः श्नमकज्वडुषु व्यभिचरितः, तेषु—मित्त्वेन, प्राक्टेरिति पदेन, पुरस्तादित्यनेन च तद्बाधेऽपि अन्यत्राप्रवृत्तौ मानाभावात् । वस्तुतस्तु तदभावे कस्यापि नाप्राप्त्यसंभवाद्बाध्यसामान्यचिन्तायां तदपवादत्वमपि संभाव्येत । तस्मादनुवृत्तिसामर्थ्यादिति भाष्यस्य—निपातानामनेकार्थत्वादावृत्तिसामर्थ्यात्—यत्यर्थः । उक्तार्थमजानानस्य शङ्का—(भाष्ये) अस्त्यन्यदिति । आचार्यदेशीयस्योत्तरम्—यद्व्यधातोरिति ॥

---

( १२९४ विधिसूत्रम् ॥ ६ । ४ । ३ आ. ७ )

## ३०८४ वर्षाभ्वश्च ॥ ६ । ४ । ८४ ॥

( ६५७० उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ वर्षाभूपुनर्भ्वश्च ॥ * ॥

( भाष्यम् ) 'वर्षाभू' इत्यत्र पुनर्भ्वश्चेति वक्तव्यम् । पुनर्भ्वौ, पुनर्भ्वः—इति ।

अत्यल्पमिदमुच्यते ।

वर्षादृन्कारपुनःपूर्वस्य भुव इति वक्तव्यम् । वर्षाभ्वौ, वर्षाभ्वः । दृन्भ्वौ, दृन्भ्वः । कारभ्वौ, कारभ्वः । पुनर्भ्वौ, पुनर्भ्वः ॥

(प्रदीपः) वर्षासु भवति, वर्षा वा भवते—प्राप्नोतीति—वर्षाभूरोषधिविशेषः । दृन्भूशब्दः 'अन्दूदृन्भू—' इति निपातितः । अत्र तु भूशब्दस्यानर्थक्यात् 'न भूसुधियोः' इत्यत्र ग्रहणाभावाद्यणादेशः सिद्धः ॥

(उद्योतः) **वर्षा वा भवत इति** । वर्षा इति द्वितीयाबहुवचनान्तम् ॥ **ओषधिविशेष इति** । भेके तु ह्रस्वान्तः । अत एव 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः' इति स्त्रियामुकारान्तलक्षणङीषन्तं पठन्तीति नारायणः । उतो गुणवचनादेव ङीषो विधानेनात्र ङयर्थं बह्वादित्वकल्पनारूपोपायान्तरस्यैवावश्यकत्वाद्भेकेऽपि दीर्घान्त इत्यन्ये ॥ **आनर्थक्यादिति** । 'दृभी ग्रन्थे' इत्यतः क्रूप्रत्ययो निपात्यते नुमागमश्चेति भावः ॥ **न भू इत्यादि** । एवं च 'दृन्पूर्वस्य—' इति निष्फलमिति भावः ॥ **यणादेश इति** । 'ओः सुपि' इत्यनेन । इदं **चिन्त्यम्**, धातुत्वाभावादुवङोऽप्राप्तौ 'इको यणचि' इत्येव यण्सिद्धेरिति । किञ्च दृन्निति नान्त उपपदे भुवः क्विपि निष्पन्नदृन्भूशब्दार्थं वार्तिके दृन्भूग्रहणस्यावश्यकत्वाच्चिन्त्यमिदम् । वार्तिके पूर्वग्रहणं परिभाषालब्धार्थानुवाद इति बोध्यम् ॥

---

( १२९५ विधिसूत्रम् ॥ ६ । ४ । ३ आ. ८ )

## ३०८५ हुश्नुवोः सार्वधातुके ॥ ६ । ४ । ८७ ॥

( ६५७१ हुश्नुग्रहणप्रत्याख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ हुश्नुग्रहणानर्थक्यमन्यस्याभावात् ॥ * ॥

( भाष्यम् ) हुश्नुग्रहणमनर्थकम् ।

---

१ 'विशेषयिष्यामः' इति च. छ. झ. पाठः ॥

२ 'इत्येव' इति च. छ. ट. पाठः । 'इति यथा कुमार्यौ कुमार्य इति' इति झ. क. पाठः ॥

३ 'दुपसर्जनम्पदं पदान्तर' इति ङ. झ. पाठः ॥

४ 'ननु च' इति क. च. पाठः ॥

५ छ. पुस्तके 'इति' शब्दपाठो न ॥

६ भवत इति । 'भू प्राप्तावात्मनेपदी' इत्यस्य चुराद्यन्तर्गतस्याधृषीयत्वेन णिचो वैकल्पिकत्वाण्णिजभावे रूपम् । तस्य च सकर्मकत्वात् 'वर्षा' इति कर्मणि द्वितीया ॥

७ नारायण इति । भाष्यटीका—सूक्तिरत्नाकरकृदयं शेषकुलोत्पन्नो नारायण इति झ. पुस्तककृदुक्तिः ॥

८ 'दृन्भू' इत्येतद्घटकभूशब्दस्यानर्थक्यं प्रतिपादयति—'दृभी' इत्यादिना ॥

९ वार्तिके इति । वार्तिके भाष्यकृतोपसंख्यातस्पूर्वग्रहणमित्यर्थः ॥

किं कारणम्?

**अन्यस्याभावात्। न ह्यन्यत्सार्वधातुकेऽस्ति, यस्य यणादेशः स्यात्॥**

**ननु चायमस्ति-याति, वातीति।**

**क्ङितीत्यनुवर्तते॥**

**इदं तर्हि—यातः, वात इति।**

**अचीति वर्तते॥**

**इह तर्हि-यान्ति, वान्तीति।**

**य्वोरिति वर्तते॥**

**एवमपि-धियन्ति, पियन्ति-अत्र प्राप्नोति।**

**ओरिति वर्तते॥**

**एवमपि-लुवन्ति, रुवन्ति-इत्यत्र प्राप्नोति।**

**अनेकाजिति वर्तते॥**

**एवमपि-अयुवन्, अरुवन्-इत्यत्रापि प्राप्नोति।**

**एतदप्यटोऽसिद्धत्वादेकाज्भवति॥**

**एवमपि-प्रोर्णुवन्ति-इत्यत्रापि प्राप्नोति।**

**असंयोगपूर्वस्येत्यनुवर्तते॥**

**यङ्लुगर्थं तर्हि हुश्नुग्रहणं कर्तव्यम्। यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्ति, तदर्थमिदम्। युवं योयुवतीनां वृषभम्। भवतु रोरुवतीनाम्॥**

**यङ्लुगर्थमिति चेत्, तन्न।**

**किं कारणम्?**

**आर्धधातुकत्वात्सिद्धम्।**

**कथमार्धधातुकत्वम्?**

**उभयथा छन्दसीति वचनात्। अन्येऽपि हि धातुप्रत्ययाश्छन्दस्युभयथा दृश्यन्त इति॥**

(प्रदीपः) अधिकारानुवृत्तिसामर्थ्याददतिप्रसङ्गाभावं मत्वाऽऽह—**हुश्नुग्रहणानर्थक्यमिति॥**

(उद्द्योतः) भाष्ये—**अयुवन्नित्यादि**। एषैव सिद्धान्त्युक्तिः। असिद्धत्वानित्यत्वज्ञापकमिदम्, 'श्नसोः-'इति तपरत्ववदिति तदाशयः। इत उत्तरमेकदेशिनोरुक्तिः। अत एवान्ते 'इत्येतत्सिद्धं भवति' इत्युक्तिः। अन्यथा ज्ञापितेऽपि हुश्नुवोरित्यस्य चारितार्थ्यायोवर्णान्तेभ्योऽप्यस्य भाषायामावश्यकतया **'इत्यादि सिद्धं भवति'**इति वदेत्। एवं चैतत्प्रयोगद्वयातिरिक्तयङ्लुगन्तं भाषायामसाध्वेव। अत एव 'क्ङिति च'इति सूत्रे रोरवीतीत्यस्य छान्दसत्वमुक्तं भाष्यकृतेति ध्येयम्। **किंच 'किमेतस्य ज्ञापने प्रयोजनम्'**इति प्रश्नस्य लोके उवर्णान्तयङ्लुगन्तप्रयोगादर्शनमेव बीजम्। तत्र तत्प्रयोगाप्रदर्शनेनास्योत्तरस्यैकदेश्युक्तित्वमावश्यकम्। 'यङोऽचि च'इति सूत्रे चलभ्यवाक्यभेदलभ्यस्यानैमित्तिकयङ्लुको बहुलग्रहणानुवृत्त्या यथाप्रयोगं लोकेऽपि लाभेन ज्ञापकानुपयोगाच्चेति बोध्यम्॥

(हुश्नुग्रहणज्ञापनभाष्यम्)

**एवं तर्हि सिद्धे सति यत् हुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यः-भाषायामपि यङ्लुग्भवतीति।**

**किमेतस्य ज्ञापने प्रयोजनम्?**

**बेभिदीति, चेच्छिदीति-इत्येतत्सिद्धं भवति भाषायामपि-इति॥**

(प्रदीपः) **भाषायामपीति**। ततो यङ्लुङ्निवृत्त्यर्थं हुश्नुग्रहणमर्थवत्॥

(१२९६ विधिसूत्रम्॥ ६।४।३ आ.९)

## २०८७ ऊदुपधाया गोहः॥ ६।४।८९॥

(उपधाकार्याधिकरणम्)

(विकृतनिर्देशाक्षेपभाष्यम्)

**किमर्थं गुहेर्विकृतस्य ग्रहणं क्रियते, न गुह इत्येवोच्येत?**

(प्रदीपः) **किमर्थमिति**। लघुं विहाय निर्देशं कस्मात् गौरवमाश्रितमिति प्रश्नः॥

(६५७२ विकृतनिर्देशप्रयोजनवार्तिकम्॥ १॥)

**॥ * ॥ गोहिग्रहणं विषयार्थम्॥ * ॥**

(भाष्यम्) **गोहिग्रहणं क्रियते विषयार्थम्। विषयः प्रतिनिर्दिश्यते। यत्रास्यैतद्रूपं तत्र यथा स्यात्, इह मा भूत्—निजुगुहतुः, निजुगुहुरिति॥**

(प्रदीपः) **गोहिग्रहणमिति**। कृतगुणस्योत्वं यथा स्यात्, अकृतगुणस्य मा भूदित्येवमर्थमित्यर्थः॥

(उद्द्योतः) विषयं दर्शयति—**कृतगुणस्येति॥ अकृतगुणस्येति**। क्ङिद्विषय इत्यर्थः॥

(विकृतनिर्देशप्रयोजनभाष्यम्)

**अयादेशप्रतिषेधार्थं च विकृतग्रहणं क्रियते॥**

(प्रदीपः) **अयादेशप्रतिषेधार्थश्चेति**। गुणे कृते तस्य स्थाने ऊत्वे कृते सत्यूत्वस्यासिद्धत्वे गुरुपूर्वादुत्तरो णिर्भवति न तु लघुपूर्वादिति ल्यप्ययादेशो न भवति। 'गुहः' इति तु निर्देशे क्रियमाणे नित्यत्वात् बाधित्वा गुणमुकारस्थाने ऊकारः प्राप्नोति। तस्य चासिद्धत्वात् लघुपूर्वादुत्तरो णिर्भवतीति अयादेशः स्यात्॥

---

१ 'इत्यत्र प्राप्नोति' इति च. छ. झ. पाठः॥

२ 'नद योयुवतीनां। वृषभं रोरुवतीनाम्' इति च. छ. झ. पाठः॥

३ 'यङ्लुगर्थमिति चेदार्धधातुकत्वात्सिद्धम्' इति वार्तिकपाठो मुद्रितपुस्तकेषु॥

४ इदमिति। अत्र सूत्रे हुश्नुग्रहणमित्यर्थः। यथा 'श्नसोरल्लोपः' इति सूत्रे भाष्ये तत्रत्यतपरकरणस्य मत्याख्यानेऽपि 'अत एक-' (६।४।१२०) इति सूत्रे 'श्नसोरत्त्वे तकारेण ज्ञाप्यते त्वेत्वशासनम्' इतिवदिति भावः॥

५ 'तिरिक्तं यङ्लु' इति झ. ढ. पाठः॥

६ 'अथ किमर्थं' इति झ. ढ. पाठः॥

७ अ. पुस्तके नास्य पाठः॥

८ 'अयादेशप्रतिषेधार्थश्च' इति वार्तिकमत्र ङ. घ. छ. झ. पुस्तकेषु पठ्यते॥

( उद्द्योतः ) नित्यत्वादिति । गुणस्त्वनित्यः । ऊत्वे लघूपधत्वाभावादप्राप्तेः ॥

( ६५७३ प्रयोजनसमर्थकवार्तिकम् ॥ २ ॥ )

॥ * ॥ ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्वस्यासिद्धत्वात् ॥ * ॥

( भाष्यम् ) ह्रस्वादेशे हि सति अयादेशः प्रसज्येत । प्रगूह्य गतः, उपगूह्य गत इति ।

किं कारणम् ?

ऊत्वस्यासिद्धत्वात् । असिद्धमूत्वम्, तस्यासिद्धत्वात् 'ल्यपि लघुपूर्वात्' ( ६।४।५६ ) इत्ययादेशः प्रसज्येत ॥

( प्रथमप्रयोजनाक्षेपभाष्यम् )

विपयार्थेन तावन्नार्थो गोहिग्रहणेन ।

प्रश्लिष्टनिर्देशात्सिद्धम् । प्रश्लिष्टनिर्देशोऽयम्–उ-ऊत्-ऊदिति ।

तत्र ह्रस्वस्यावकाशः—निजुगुहतुः, निजुगुहुः ।

गुणस्यावकाशः–निगोढा, निगोढुम् ।

इहोभयं प्राप्नोति—निगूहयति, निगूहति, निगूहकः, साधु निगूही ॥

परत्वात् गुणे कृते आन्तर्यतो दीर्घो भवति ॥

( प्रदीपः ) उ-ऊत्-ऊदिति । ह्रस्वदीर्घावादेशौ सूत्रे निर्दिश्येते । 'तत्र स्थानेऽन्तरतम'परिभाषावशात् ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः ॥

निजुगुहतुरिति । अत्र कित्त्वात् गुणप्रतिषेधादुकारस्यादेश उकारः ॥

निगोढेति । अचीत्यधिकारादूकारस्यात्राप्रसङ्गः ॥

निगूहयतीति । उकारस्य गुणश्च प्राप्नोति उकारश्च । तत्र परत्वात् गुणे कृते एकदेशविकृतस्यानन्यत्वादूकार आदेश इति नार्थो विकृतनिर्देशेन । 'दोषो णौ'इत्यत्र तु लक्ष्यदर्शनवशादूकारोऽपेक्ष्यते, न तु ह्रस्व इति तत्रापि न दोषः ॥

( उद्द्योतः ) ह्रस्वदीर्घाविति । आदेशोऽपि ह्रस्व एवास्तु, भाव्यमानस्योकारस्य सवर्णग्राहकत्वाद्दीर्घस्य दीर्घसिद्धिरिति चेत् उपायान्तरत्वाददोष इत्याहुः ॥

परत्वाद्गुण इति । न च ह्रस्वे सावकाशेऽपि दीर्घोऽनवकाशः। ह्रस्वापेक्षयैव विप्रतिषेधविचारात् । दीर्घस्तु गुणात्प्राक्प्राप्त्यैव न, तदन्तरतमस्यानिनोऽभावात् । उभयनिर्देशसामर्थ्येन स्वस्वसदृशस्थान्याक्षेपात् । 'गुणश्च प्राप्नोत्युकारश्च'इत्येव पाठः ॥ नन्वेवं 'दोषो णौ'इत्यत्रापि तत्सूत्रवक्ष्यमाणरीत्या 'दुषः' इति निर्देशे तेन पर्यायेणोभौ स्यातामत आह—दोषो णाविति । विकृतनिर्देशे तु तत्सामर्थ्यादेव गुणे कृत आदेशः । स चान्तरतम्याद्दीर्घ एवेति भावः ॥

( द्वितीयप्रयोजनाक्षेपभाष्यम् )

अयादेशप्रतिषेधेन चापि नार्थः ।

समानाश्रयवचनात्सिद्धम् । समानाश्रयमसिद्धं भवति । व्याश्रयं चैतत् ।

णावूत्वम्, णेर्ल्यप्ययादेशः ॥

---

( १२९७ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १० )

## ३०८८ दोषो णौ ॥ ६ । ४ । ९० ॥

( विकृतनिर्देशाक्षेपभाष्यम् )

किमर्थं दुषेर्विकृतस्य ग्रहणं क्रियते, न दुष इत्येवोच्येत ?

( ६५७४ विकृतनिर्देशप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ दोषिग्रहणे च ॥ * ॥

( भाष्यम् ) किम् ?

अयादेशप्रतिषेधार्थं विकृतग्रहणं क्रियते ।

* ह्रस्वादेशे ह्ययादेशप्रसङ्गः, ऊत्वस्यासिद्धत्वात् * ।

ह्रस्वादेशे हि सति अयादेशः प्रसज्येत । प्रदूष्य गतः । उपदूष्य गतः ।

किं कारणम् ?

ऊत्वस्यासिद्धत्वात् ।

असिद्धमूत्वं तस्यासिद्धत्वात् 'ल्यपि लघुपूर्वात्' इत्ययादेशः प्रसज्येत ॥

( उद्द्योतः ) अत्र विकृतनिर्देशस्य विपयार्थत्वं न फलम्, णावित्युक्तेः । अतो भाष्ये—अयादेशप्रतिषेधार्थमिति ॥

( प्रयोजनाक्षेपभाष्यम् )

समानाश्रयवचनात्सिद्धमित्येव । समानाश्रयमसिद्धम् । व्याश्रयं चैतत् । णावूत्वम्, णेर्ल्यप्ययादेश इति ॥

---

१ अ. पुस्तके नास्य पाठः ॥

२ च. छ. पुस्तकयोर्नास्य पाठः ॥

३ 'आन्तर्यतो दीर्घस्य दीर्घो' इति च. छ. झ. पाठः ॥

४ परिभाषावशादिति । 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठाश्रयणेनेदम् ॥

५ 'चैतत् । कथम् ? णावू–' इति च. छ. झ. पाठः ॥

६ 'णावुत्वं' इति ह्रस्वपाठः अ. पुस्तके ॥

७ 'अत्रापि समाना–' इति च. छ. झ. पाठः ॥

८ छ. पुस्तके एतदादिः पाठो न ॥

९ 'णावुत्वं' इति अ. क. ट. पाठः ॥

( १२९८ विधिसूत्रम् ॥ ६ । ४ । ३ आ. ११ )

## ३०९१ चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ६ । ४ । ९३ ॥

( ६५७५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे च ॥ * ॥**

( भाष्यम् ) **चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चोपसंख्यानं कर्तव्यम् । शमयन्तं प्रयोजितवान्-अशामि, अशामि । शमं शमम्, शामं शामम् । शंशमयतेः-अशंशमि, अशंशामि । शंशमं शंशमम्, शंशामं शंशामम् ॥**

( प्रदीपः ) **णिज्व्यवेतानामिति ।** चिण्णमुल्परे णौ मितामङ्गानां वा दीर्घ उच्यते । तत्र यदा ण्यन्ताद्यङन्ताच्च णिज्विधीयते तदा पूर्वेण णिचा यङ्कारेण च व्यवधानाद्दीर्घो न प्राप्नोतीति वचनम् ॥ **प्रयोजितवानिति ।** यद्यपि चिण्विषयं कर्म प्रदर्शनीयं तथापि णिजुत्पत्तये हेतुव्यापारदर्शनार्थं कर्तुरुपादानम्, न त्वत्र कर्ता विवक्षितः ॥ **शंशमयतेरिति ।** शमेर्यङि 'नुगतोऽनुनासिकान्तस्य'इति नुकि कृते शंशम्यशब्दाण्णिचि अल्लोपयलोपौ ॥

( उपसंख्यानप्रयोजनजिज्ञासाभाष्यम् )

**किं पुनः कारणं न सिध्यति ?**

**चिण्णमुल्परे णौ मितामङ्गानां दीर्घो भवतीत्युच्यते, यश्चात्र णिश्चिण्णमुल्परो न तस्मिन् मिदङ्गम्, यस्मिंश्च मिदङ्गं नासौ चिण्णमुल्पर इति ॥**

**लोपे कृते चिण्णमुल्परो भवति ।**

**स्थानिवद्भावाच्च चिण्णमुल्परः ॥**

**ननु च प्रतिषिध्यते तत्र स्थानिवद्भावः-दीर्घविधिं प्रति न स्थानिवदिति ।**

**एवमप्यसिद्धत्वान्न प्राप्नोति ॥**

**एवं तर्हि—**

( प्रदीपः ) **लोपे कृत इति ।** यद्यपि परस्यापि णिचो लोपस्तथापि प्रत्ययलक्षणेन भूतपूर्वगत्या वा चिण्णमुल्परो णिः॥

**दीर्घविधिं प्रति नेति ।** एतदेव हि दीर्घग्रहणस्य प्रयोजनं स्थानिवत्त्वप्रतिषेधो यथा स्यात् । यदि तु प्रकृतो ह्रस्वो विकल्पेत तदा णौ णिलोपस्य स्थानिवत्त्वाद्विकल्पो ह्रस्वस्य न स्यात्, यङ्कारलोपस्य स्थानिवद्भावान्नित्यं ह्रस्वः श्रूयेत । 'हेडृ वेष्टने' इत्यस्य च ह्रस्वाभावपक्षे 'अहेडि'इति स्यात् । दीर्घे तु ह्रस्वस्य कृते 'अहीडि'इति सिध्यति ॥

( उद्द्योतः ) **भूतपूर्वगत्या वेति**-प्रौढ्या ॥ भाष्ये—**दीर्घविधिं प्रतीति ।** यद्यपि तत्र त्रैपादिकदीर्घस्यैव साहचर्याद्ग्रहणम्, अत एव 'पूर्वत्रासिद्धीये' इत्यवष्टभ्य 'वरेयलोपस्वरवर्जं द्विर्वचनादीनि न कर्तव्यानि'इति तत्प्रत्याख्यातं भाष्ये 'न पदान्त' सूत्रे, तथाऽपि लक्ष्यानुरोधात्साहचर्यानित्यत्वाच्च 'न पदान्त'सूत्रस्थं 'वरेयलोपस्वरवर्जं'इत्युपलक्षणमिति भावः । ण्यन्ताण्णौ 'ण्याकृतिनिर्देशात्सिद्धं'इति तु चिन्त्यम् । जातेः पौर्वापर्याभावेन 'चिण्णमुल्परे'इति विशेषणासङ्गत्याऽत्र जातिग्रहणस्य वक्तुमशक्यत्वात् । स्पष्टं चेदं 'आर्द्धधातुके' इति सूत्रे द्वितीयाध्याये कैयटे भाष्ये च ॥ दीर्घग्रहणस्य फलान्तरमपि दर्शयति—**हेडृ वेष्टन इति ।** घटादिरयम् । केचित्तु 'ऊकाल'-सूत्रस्थस्य कमेर्णिङ्सूत्रस्थस्य प्रकृतसूत्रस्थस्य च भाष्यस्य प्रामाण्यात् 'हेड वेष्टने'इत्यस्य घटादौ पाठोऽसांप्रदायिक इत्याहुः ॥

( प्रयोजनानर्थक्यबोधभाष्यम् )

**चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्सिद्धम् ।**

**किमिदमन्तरङ्गलक्षणत्वादिति ?**

**यावद्ब्रूयात्समानाश्रयवचनात्सिद्धमिति ।**

**व्याश्रयं चैतत् ।**

**कथम् ?**

**णौ णिलोपः, णौ चिण्णमुल्परे मितामङ्गानां दीर्घत्वम् । तस्मान्नार्थ उपसंख्यानेनेति ॥**

( प्रदीपः ) **अन्तरङ्गलक्षणत्वादिति ।** णियङोर्लोपो णिमात्रापेक्षत्वादन्तरङ्गः । दीर्घस्तु चिण्णमुल्परण्यपेक्षत्वात् बहिरङ्ग इति समानाश्रयत्वाभावादसिद्धत्वाभाव इत्यर्थः ॥

( १२९९ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १२ )

## ३०९४ छादेर्घेऽद्व्युपसर्गस्य ॥६।४।९६॥

( उपसंख्यानभाष्यम् )

**अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । इहापि यथा स्यात्-समुपाभिच्छादः ॥**

---

१ च. छ. पुस्तकयोर्नैतद्वार्तिकम् ॥

२ शमयन्तम्प्रयोजितवानिति भाष्ये कर्तृनिर्देशात्कर्तर्येव 'अशमि' इति रूपमिति भ्रमवारणायाह—यद्यपीत्यादि ॥

३ लोपे कृत इति । द्वितीयणिचो लोपे कृत इत्याशयः ॥

४ परस्यापीति । प्रकृतेः परस्य प्रथमणिचोऽपि लोपे इत्यर्थः ॥

५ प्रकृतसूत्रस्थस्येति । प्रकृतसूत्रस्थेन णिज्व्यवेतानामित्यादिभाष्येण 'अशमि' इत्यादौ णिजन्ताण्णिचि स्थानिवद्भावाभावः फलं दीर्घग्रहणस्येति बोधितम् । तत्र 'हेड' इत्यस्य घटादित्वे केवलण्यन्त एव फलसत्त्वेन ण्यन्ताण्णिचूपर्यन्तानुधावनं व्यर्थमिति भावः ॥

६ एतद्वार्तिकमिति च. छ. झ. पाठः ॥

७ 'सिद्धमित्येव' इति च. छ. पाठः ॥

८ 'णणौ णिलोपः' इति च. छ. पाठः ॥

९ अत्र 'ऊदुपधायाः-' इत्यत उपधाया इति 'दोषो णौ' इत्यतो णाविति वर्तते । छादेरित्येतत् णिमात्रभागानुकरणमागमतुनेकारेण । एवञ्च घपरे णावङ्गस्य छाद उपधाया ह्रस्व इति सूत्रार्थः । एतेन णेरेव ह्रस्वः, तत्सामर्थ्याच्च णिलोपो नेत्यपास्तम् ॥

१० 'समुपाभिच्छाद इति' छ. झ. पाठः ॥

( प्रदीपः ) **अद्विप्रभृत्युपसर्गस्येति वक्तव्यमिति ।** इहे संख्यान्तरोपजने आश्रयाविनाशेऽपि पूर्वसंख्याविनाशात्त-द्वीचिशब्दाप्रवृत्तिरिति भावः ॥

( उपसंख्यानाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ?**

**न वक्तव्यम् । यत्र त्रिप्रभृतयः सन्ति द्वावपि तत्र स्तः, तत्राद्व्युपसर्गस्येत्येव सिद्धम् ॥**

( प्रदीपः ) **यत्र त्रिप्रभृतय इति ।** वस्तुसद्भावमाश्रित्य परिहारः । 'अद्व्युपसर्गस्य'इति च प्रसज्यप्रतिषेधो वाक्यभे-देनाश्रीयते । पर्युदासाश्रयणे ह्यनुपसर्गस्य ह्रस्वो न स्यात् ॥

( उद्द्योतः ) प्रसज्यप्रतिषेधे वाक्यभेदासमर्थसमासापत्तावपि लक्ष्यानुरोधात्स आश्रीयत इत्याह—**पर्युदासाश्रयण इति ।** द्व्युप-पसर्गसदृशस्य सोपसर्गस्यैव ग्रहणापत्तेरिति भावः ।

( समाधानभाष्यम् )

**न वा एष लोके संप्रत्ययः । न हि द्विपुत्र आनी-यतामित्युक्ते त्रिपुत्र आनीयते ।**

**तस्मादद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ॥**

( प्रदीपः ) **न वै एष इति ।** संख्याशब्दानामेष स्वभावो यत्संख्यान्तरस्योत्तरस्य गौणस्य मुख्यस्य वा विषये न प्रवर्तन्ते । तथा चोक्तम्—'एकाजनेकाजूग्रहणेषु चावृत्तिसंख्यानात्सिद्धम्' इति। 'नैधेयः' इति च पूर्वविधिग्रहणस्य प्रत्युदाहरणमुपन्य-स्तम्, स्थानिवद्भावे सति त्र्यच्त्वाद्यच्त्वाभावात्तदाश्रयो ढक् न स्यादिति ॥

( उद्द्योतः ) मुख्यस्योत्तरसङ्ख्यान्तरस्य विषये पूर्वसङ्ख्याया अप्रवृत्तौ भाष्ये दृष्टान्त उक्तः, गौणविषये दर्शयति—**तथा चोक्तमिति ।** 'अइउण्'सूत्रे । तत्र द्व्यकारादीनामेकत्वपक्षे 'घटेन तरति-घटिकः' इत्यत्र द्व्यज्लक्षणष्ठनोऽप्राप्तिमाशङ्क्यायं परिहार उक्तः ॥ **स्थानिवद्भावे सतीति ।** निपूर्वाद्धाञः किप्रत्यय आतो लोपे तस्य स्थानिवत्त्वेन त्र्यच्त्वं स्यादिति भावः॥ **तदाश्रय इति ।** द्व्यच्त्वाश्रय इत्यर्थः ॥

—⁂—

( १३०० विधिसूत्रम् ॥ ६ । ४ । ३ आ. १३ )

## ३०९८ घसिभसोर्हलि ॥ ६।४।१०० ॥

( प्रदीपः ) अचीत्यधिकाराद्धलि न प्राप्नोतीति हल्ग्रहणं क्रियते । तदुपादाने चाचि न प्राप्नोतीति चकारोऽच्सम्बन्धार्थः क्रियते । तत्राज्ग्रहणस्येहानधिकारादेव सर्वत्र लोपः सिध्यतीति 'हलि च'इति न वक्तव्यम् । 'अन्यत्रापि'इति वचनाद्वार्तिकका-रश्चकारं न पपाठेति लक्ष्यते ॥

( उद्द्योतः ) हल्ग्रहणप्रत्याख्यातृवार्तिकाशयमाह—**तत्रेति ॥ अनधिकारादेवेति ।** व्याख्यानादेवाधिकारनिवृत्तिः सिद्धेति भावः ॥ **अन्यत्रापीति वचनादिति ।** सूत्रोक्तविषयादन्यत्रापीति तदर्थः । स च चकाराकरण एवोपपद्यत इत्यर्थः ॥

( ६५७६ हलिग्रहणप्रत्याख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ हल्ग्रहणानर्थक्यमन्यत्रापि दर्शनात् ॥ * ॥

( भाष्यम् ) **हल्ग्रहणमनर्थकम् ।**

**किं कारणम् ?**

**अन्यत्रापि दर्शनात् । अन्यत्रापि हि लोपो दृश्यते—अग्निर्वनानि बप्सति, शरावे बप्सति—इति ॥**

( प्रदीपः ) **बप्सतीति ।** एकवचने प्राप्ते व्यत्ययेन झिः, श्लौ द्विर्वचनम् । 'अदभ्यस्तात्'इत्यदादेशः, उपधालोपः, 'खरि च'इति चर्त्वम् । अत्र चान्तरङ्गत्वादुपधालोपात् पूर्वं द्विर्वचनं क्रियते । यदि तु झावेव पूर्वं लोपः स्यात्ततो द्विर्वचनं न स्यात् ॥

( उद्द्योतः ) **एकवचन इति ।** अग्नेरेकस्य कर्तृत्वादिति भावः ॥ **अन्तरङ्गत्वादिति ।** यद्यप्युपधालोपः परो नित्यश्च तथापि श्लुमात्रापेक्षत्वाद्द्वित्वमन्तरङ्गम्, ङित्प्रत्ययापेक्षत्वाद्बहिरङ्गो लोप इत्यर्थः ॥ **द्विर्वचनं न स्यादिति ।** अनच्कत्वात्, लोपस्य द्वित्व-निमित्ताज्निमित्तत्वाभावेन स्थानिवत्त्वाभावाच्च । द्वित्वे कृते परत्वा-न्नित्यत्वाच्चादेश उपधालोपानापत्तिरिति भावः ॥

—⁂—

( १३०१ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १४ )

## ३०९९ हुझल्भ्यो हेर्धिः ॥ ६।४।१०१ ॥

( ध्यादेशाधिकरणम् )

( वार्तिकावतरणे प्रतिषेधोपसंख्यानभाष्यम् )

**इटः प्रतिषेधो वक्तव्यः । रुदिहि, स्वपिहि । झल इति धित्वं प्राप्नोति ॥**

( प्रदीपः ) **रुदिहीति ।** शब्दान्तरप्राप्त्या द्वयोरप्यनि-त्यत्वात्परत्वादिटि कृते पुनः प्रसङ्गविज्ञानाद्धित्वप्रसङ्गः ॥

( ६५७७ प्रतिषेधानर्थक्ये बोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः ॥ * ॥

(भाष्यम्) **हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ।**

१ इह—समुपामिच्छाद इत्यत्र ॥

२ तद्वाचिशब्दाप्रवृत्तिः—द्व्युपसर्गवाचिशब्दाप्रवृत्तिः ॥

३ 'हल्ग्रहणमनर्थकमन्य' इति च. छ. झ. पाठः ॥

४ 'अग्निस्तृणानि बप्सति' इति झ. छ. पाठः ॥

५ 'स शरावप्सतीति' इति ट. पाठः । 'शरावे बप्सति चरुः' इति छ. च. झ. पाठ. ॥

६ 'तथापि ह्रस्वमात्रा' इति झ. ढ. पाठः, स प्रामादिकः ॥

धित्वं कस्मान्न भवति ?

हलधिकारात् । प्रकृतं हल्ग्रहणमनुवर्तते ।

क्व प्रकृतम् ?

'घसिभसोर्हलि' (१००) इति ।

तद्वै सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।

तद्वै तत्र प्रत्याख्यायते, प्रत्याख्यातं सद्यया विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमिहानुवर्तते[1] ॥

(उद्योतः) भाष्ये—तद्वै तत्र प्रत्याख्यायत इति । पूर्ववाक्ये 'हलि'इत्यस्यानुपयोगेन सप्तम्यर्थे सप्तम्यां प्रमाणाभावेन षष्ठ्यर्थे इयं सप्तमीति भावः ॥

(प्रकारान्तरेण प्रतिषेधानर्थक्यबोधकभाष्यम्)

अथवा—'हुझल्भ्यः' इत्येषा पञ्चमी 'हलि'इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' (१।१।६७) इति ॥

(प्रदीपः) अथवेति । यद्यपि सप्तम्यचरितार्था तथापि 'हुझल्भ्यः' इत्यनया पञ्चम्याऽचरितार्थया 'हेः'इत्येतदनुगुणा षष्ठी प्रकल्प्यते । ननु षष्ठी प्रक्लृप्तौ तदादिविधेरसम्भवः । 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति ह्युच्यते । नैष दोषः । हल्ग्रहणानुवृत्तिसामर्थ्यात् हलन्तत्वासम्भवाच्च तदादिविधिर्विज्ञास्यते ॥

(उद्योतः) 'अथवा'इति पक्षेऽप्ययमेवार्थः प्रकारान्तरेणोच्यत इत्याह—यद्यपीति ॥ ननु द्वयोरप्यचरितार्थयोः पञ्चम्येव कल्पिका कुत इत्यत आह—हेरित्येतदनुगुणेति । हेरित्यस्य विशेषणाकाङ्क्षायां तेनैव हल्ग्रहणस्य संबन्धो युक्त इत्यर्थः । द्वयोरचरितार्थयोः परत्वात् 'तस्मादित्युत्तरस्य'इत्यस्यैव प्रवृत्तिरिति वक्तुं युक्तम् ॥ हल्ग्रहणेति । हल्ग्रहणानुवृत्तेः फलान्तराभावाद्धेरित्यनेन सम्बन्धे तदन्तविध्यसंभवात्तदादिविधिसिद्धिरित्यर्थः। वस्तुतः स्वरूपसत्सप्तम्येव तन्निमित्तम् । अत एव 'तस्मान्नुडचि'इत्यादौ तदादिविधिः । षष्ठीं प्रकल्पयिष्यतीत्यस्य—षष्ठ्यर्थे सप्तमीं कल्पयिष्यतीत्यर्थं इत्याहुः ॥

(प्रकारान्तरबोधकभाष्यम्)

अथवा—'निर्दिश्यमानस्यादेशा भवन्ति'इत्येवं न भविष्यति ।

यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?

इटा व्यवहितत्वात् ॥

(प्रदीपः) अथवेति । यत् षष्ठ्या निर्दिश्यते तस्यैवादेशः । सागमकस्त्वागमानामव्यभिचाराच्छब्दान्तरे श्रूयमाणे प्रतीयते न तूच्चार्यत इति तस्यादेशाभावः[2] ॥

यस्तर्हीति । आगमं विहाय हि शब्दस्यादेशो भवत्वित्यर्थः ॥

इटेति । 'तस्मादित्युत्तरस्य'इति वचनादनन्तरस्यैव षष्ठ्या कार्येण वा भाव्यम्[3] । तत्र यो निर्दिष्टो नासावनन्तरः, यश्चानन्तरः सागमको नासौ निर्दिष्ट इति धित्वाभावः ॥

(उद्योतः) ननु सागमोऽपि निर्दिश्यत एव, इटस्तदवयवत्वादत आह—सागमकस्त्विति । शब्दान्तरे श्रूयमाणे सति 'यदागमाः' इति परिभाषया प्रतीयत इत्यर्थः ॥

अनन्तरस्यैव षष्ठ्येति । पञ्चमीनिर्देशेऽनन्तरस्यैव षष्ठी प्रकल्प्येति सूत्रार्थ इति भावः ॥ पञ्चमीनिर्देशेऽनन्तरस्यैव कार्यं भवतीति सूत्रार्थमाश्रित्याऽऽह—कार्येण वेति । षष्ठ्या कार्येण भाव्यमिति पाठे षष्ठीबोधितकार्येणेत्यर्थः ॥

(प्रकारान्तराक्षेपपरिहारभाष्यम्)

यद्येवं भिन्धकि छिन्धकीत्यत्र धित्वं न प्राप्नोति ।

एवं तर्हि[4] धित्वे कृतेऽकज्भविष्यति ।

इदमिह सम्प्रधार्यम्—धित्वं क्रियतामकजिति, किमत्र कर्तव्यम् ?

परत्वाद्धित्वम् ।

नित्योऽकच् । कृतेऽपि धित्वे प्राप्नोत्यकृतेऽपि ।

अकजप्यनित्यः । अन्यस्य कृते धित्वे प्राप्नोति, अन्यस्याकृते । 'शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति'इति । उभयोरनित्ययोः परत्वाद्धित्वम्, धित्वे कृतेऽकज्भविष्यति ॥

(प्रदीपः) यद्येवमिति । यदि निर्दिश्यमानस्यादेशस्तदाकचि कृते शब्दान्तरत्वाद्धित्वाप्रसङ्गः ॥

धित्वे कृतेऽकजिति । पुनः प्रसङ्गविज्ञानाश्रयणात् । न ह्यन्यथाऽज्ञाताद्यर्थावगतिर्भवति । अथवाऽज्ञाताद्यर्थापेक्षत्वाद्बहिरङ्गोऽकजिति पूर्वं धित्वं पश्चादकच् ॥

(उद्योतः) पुनः प्रसङ्गविज्ञानाश्रयणे हेतुमाह—न हीति ॥ अथवेति । इदं चिन्त्यम् । अर्थापेक्षबहिरङ्गत्वस्यात्र शास्त्रेऽनाश्रयणादित्यसकृदावेदितम्[5] ॥

(प्रकारान्तरबोधकभाष्यम्)

अथवा—हकारस्यैवैतद्धशाक्तिजेनेकारेण ग्रहणमिति ॥

(प्रदीपः) अथवेति । इकारेणागन्तुना 'हेः'इति निर्देशः । हकारमात्रन्तु स्थानित्वेन निर्दिश्यते । एवं 'धिः'इति धकारमात्रमादेशः । इकारस्तूच्चारणार्थः, व्यञ्जनस्य स्वररहितस्योच्चारयितुमशक्यत्वात् । ततश्च रुदिहीत्यत्र हकारस्येटा व्यवधानाद्धकाराभावः । स हि समुदायभक्तत्वात्तमेव न व्यवदध्यात् । अवयवं तु व्यवदधात्येव । तथा भिन्धकीत्यत्र सत्यपि पूर्वमकचि हकारस्य धकारे कृते रूपं सिध्यति ॥

---

1 'हानुवर्तिष्यते' इति झ. पाठः ॥
2 'धेरभावः' इति झ. पाठः ॥
3 'षष्ठ्या कार्येण च भाव्यम्' छ. ढ. पाठः । अत्र समुच्चयस्याभावात् स चिन्त्यः । अथवा चकारो वार्थ इत्याश्रयणीयम् ॥
4 'एवं तर्हि' इत्यस्य छ. पुस्तके न पाठः ॥
5 असकृदिति । विस्तरेणैतदन्तरङ्गपरिभाषायामुपपादितम् ॥

( उद्द्योतः ) हकारमात्रस्य स्थाने धीति विशिष्टादेशे रूपं न सिध्येदत आह—एवं धिरितीति ॥ अशक्तिजेनेत्येतद्व्याचष्टे—व्यञ्जनस्येति । यद्यपि विभक्त्यकारेण स्थानिन उच्चारयितु शक्यत्वं तथाऽप्यादेशसाधारण्येनेदमेवोक्तम् । यद्वा तत्प्रक्रियावाक्याभिप्रायमिदम् ॥

( १३०२ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १५ )

## ३१०२ चिणो लुक् ॥ ६ । ४ । १०४ ॥

( लुकोऽधिकरणम् )

( ६५७८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥*॥ चिणो लुकि तग्रहणम् ॥*॥

( भाष्यम् ) चिणो लुकि तग्रहणं कर्तव्यम् । इह मा भूत्—अकारितराम्, अहारितराम्—इति ॥

( प्रदीपः ) तग्रहणमिति । इदमस्मिन्नसिद्धमिति भेदनिबन्धनत्वाद्विषयविषयिभावस्य 'चिणो लुक्'इत्यस्य लक्षणस्य भेदाभावादकारितरामित्यत्र लोपस्यासिद्धत्वाभावात्तरपोऽपि लुक् प्राप्नोति। एवं सति प्रत्ययत्रयात्मकस्य समुदायस्य लुक्प्रसङ्गः ॥

(उद्द्योतः) समुदायस्य लुक्प्रसङ्ग इति । लक्ष्यभेदात् वारं वार प्रवृत्त्येति भावः ॥

( ६५७९ एकदेशिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ चिणो लुकि तग्रहणानर्थक्यं सङ्घातस्याप्रत्ययत्वात् ॥ * ॥

( भाष्यम् ) चिणो लुकि तग्रहणमनर्थकम् ।

सङ्घातस्य लुक् कस्मान्न भवति ?

सङ्घातस्याप्रत्ययत्वात् । प्रत्ययस्य लुक्श्लुलुपो भवन्तीत्युच्यते, न च सङ्घातः प्रत्ययः ॥

तलोपे तर्हि कृते परस्य प्राप्नोति ।

( प्रदीपः ) इतरस्तु युगपत्प्रत्ययत्रयस्य लुक्प्रसङ्गोऽनेनोक्त इति मत्वाऽऽह—चिणो लुकीति ॥

इतरः स्वाभिप्रायं प्रकाशयति—तलोप इति ॥

( ६५८० सिद्धान्तवार्तिकम् ॥ ३ ॥)

### ॥ * ॥ तलोपस्य चासिद्धत्वात् ॥ * ॥

( भाष्यम् ) असिद्धस्तलोपस्तस्यासिद्धत्वान्न भविष्यति ॥

( प्रदीपः ) सिद्धान्त्याह—तलोपस्यासिद्धत्वादिति । प्रतिलक्ष्यं लक्षणभेदादस्ति विषयविषयिभावः ॥

( ६५८१ प्रकारान्तरेण तकारानर्थक्ये वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ कार्यकृतत्वाद्वा ॥ * ॥

( भाष्यम् ) अथवा कृतश्चिणो लुगिति कृत्वा पुनर्न भविष्यति । तद्यथा—वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।

विषम उपन्यासः । युक्तं यत्तस्यैव पुनः प्रवृत्तिर्न स्यात्, यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम् । तद्यथा—वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत-इति अग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते ।

तस्मात्पूर्वोक्तावेव परिहारौ ॥

( प्रदीपः ) अभेदपक्षमाश्रित्याह—कार्यकृतत्वाद्वेति । एकस्मिन् विषये सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात् पुनः प्रवृत्त्यभावः ॥ तद्यथेति । यथैकस्मिन् वसन्तेऽग्न्याधानं कृत्वा वसन्तान्तरे ब्राह्मणोऽग्न्याधानं न कुरुते, शास्त्रार्थस्यानुष्ठितत्वात्; तथैकस्य प्रत्ययस्य लुकि कृते प्रत्ययान्तरस्य तरबादेर्लुक् न प्रवर्तते ॥

युक्तं यत्तस्यैवेति । इहाभिन्नरूपमपि फलभेदाद्भिन्नमुच्यते। अग्न्याधानं तु कर्मान्तरेषु कर्तुर्योग्यतोत्पादनार्थमिति फलभेदाभावात् पुनर्न क्रियते । काम्यानां तु कर्मणां फलभेदात् पुनरनुष्ठानं भवति । तथेहापि तस्य लुकि कृते तरबादेर्लुक्प्रसङ्गः। अग्न्याधानं निमित्तमस्य-इति बहुव्रीहिः। क्रियाविशेषणं चैतत् । अनाहिताग्नेरनधिकारादग्न्याधानं निमित्तं यागस्योच्यते ॥

(उद्द्योतः) अभेदपक्षम्—निमित्तभूतानुपूर्व्यैक्येन लक्षणाभेदपक्षमिति भावः ॥ अग्न्याधानाग्निष्टोमयोर्वैधर्म्ये हेतुं न विद्म इति शङ्कां परिहरति—इहाभिन्नरूपमिति । ज्योतिष्टोमादीत्यर्थः ॥

कर्मान्तरेषु—अग्निहोत्रादिषु । कर्तुः—इत्युपलक्षणम् । अग्नेश्चेत्यपि बोध्यम् ॥ इहापि रूपान्तरप्राप्त्या फलभेद इत्याह—तथेति । अत्र यद्वक्तव्यं तत् 'संप्रसारणाच्च'इति सूत्र उक्तम् ॥ भाष्ये—पूर्वोक्तावेवेति । तग्रहणमसिद्धत्वं वा ॥

( प्रकारान्तरबोधकभाष्यम् )

अथवा क्ङितीति वर्तते ।

क्व प्रकृतम् ?

'गमहनजनखनघसां लोपः क्ङित्यनङि' ( ६।४।९८ ) इति ।

तद्वै तत्र सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः। चिण इत्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' (१।१।६७) इति॥

१ स्थानिन इति । हल्मात्रस्येति शेष· ॥

२ प्रक्रियावाक्येति । हेर्धिरित्यत्र 'ह्-अस्' इति प्रक्रियावाक्यम् । तत्र 'ह्' इति व्यञ्जनमात्रस्योच्चारणमशास्त्रीयमित्यर्थः ॥

३ छ. पुस्तके वार्तिकमिदं न दृश्यते ॥

**दो दद्धोः ॥ ७ । ४ । ४६ ॥**

( अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ॥)
( सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥ )
तान्ते दोषो दीर्घत्वं स्यात्, दान्ते दोषो निष्ठानत्वम् ॥
धान्ते दोषो धत्वप्राप्तिः, थान्तेऽदोषस्तस्मात्थान्तः ॥

**अपो भि ॥ ७ । ४ । ४८ ॥**

स्ववस्स्ववतसोर्मास उषसश्च त इष्यते ॥

---

## अथाष्टमोऽध्यायः ॥

**कुत्सने च सुप्यगोत्रादौ ॥ ८।१।६९ ॥**

सुपि कुत्सने क्रियाया
मकारलोपोऽतिङीति चोक्तार्थम् ॥
पूतिश्च चानुबन्धो वि-
भाषितं चापि बह्वर्थम् ॥
गतिना तु विशिष्टस्य गतिरेव विशेषकः ।
साधने केन ते न स्याद्बाह्यमाभ्यन्तरो हि सः ॥

**धि च ॥ ८ । २ । २५ ॥**

धिसकारे सिचो लोपः, चकाद्धीति प्रयाजनम् ॥
आशाध्वं तु कथं ते स्यात्, जश्त्वं सस्य भविष्यति॥१॥
सर्वत्रैवं प्रसिद्धं स्यात्, श्रुतिश्चापि न भिद्यते ॥
लुङश्चापि न मूर्धन्ये ग्रहणं, सेटि दुष्यति ॥ २ ॥
घसिभस्योर्न सिध्येत्तु, तस्मात्सिज्ग्रहणं न तत् ॥
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥ ३ ॥

**अनुपसर्गात् फुल्लक्षीबकृशो-
ल्लाघाः ॥ ८ । २ । ५५ ॥**

कृशेः क एष विहित इगुपधात्,
स्वरे हि दोषो भवति परिकृशे ॥
पदस्य लोपो विहित इति मतम्,
जगत्यनूना भवति हि रुचिरा ॥

**वित्तो भोगप्रत्यययोः ॥ ८ । २ । ५८ ॥**

यस्य विदेः श्नशकौ तपरत्वे
तनवचने तदु वाप्रतिषेधौ ॥
श्यन्विकरणान्न विधिश्छिदितुल्यो
लुग्विकरणो वलि पर्यवपन्नः ॥
( यवोर्विद्योः श्नशावुक्तौ तयोर्नत्वस्य वा नञौ
ययोस्तु श्यँलुकौ ताभ्यां छिदिवच्चेट्च इष्यते
वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः )

**नित्यं समासेऽनुत्तरपद-
स्थस्य ॥ ८ । ३ । ४५ ॥**

नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः ॥
तस्मिन्षत्वं कार्यं तद्युक्तं तच्च मे नेह ॥ १ ॥
ऐकार्थ्यं सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत ॥
तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते ॥ २ ॥
अथ चेत्कृदन्तमेतत्ततोऽधिके नैव मे भवेत् प्राप्तिः॥
वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत ॥ ३ ॥
अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम् ॥
सिद्धं च मे समासे, प्रतिषेधार्थस्तु यत्नोऽयम् ॥४॥

**सुविनिर्दुर्भ्यः सुपिसुति-
समाः ॥ ८ । ३ । ८८ ॥**

सुपेः षत्वं स्वपेर्मा भूत्, विसुष्वापेति केन न ॥
हलादिशेषान्नसुपिः, इष्टं पूर्वं प्रसारणम् ॥ १ ॥
स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः ॥
अनर्थके विषुषुपुः, सुपिभूतो द्विरुच्यते ॥ २ ॥

**अनितेः ॥ ८ । ४ । १९ ॥**

**अन्तः ॥ ८ । ४ । २० ॥**

यो वा तस्मादनन्तरः ॥

**उभौ साभ्यासस्य ॥ ८ । ४ । २१ ॥**

साभ्यासस्य द्वयोरिष्टम् ॥

**उपसर्गादनोत्परः ॥ ८ । ४ । २८ ॥**

भाविन्यप्योति नेष्यते ॥

**अ अ इति ॥ ८ । ४ । ६८ ॥**

आदेशार्थं सवर्णार्थमकारो विवृतः स्मृतः ॥
आकारस्य तथा ह्रस्वस्तदर्थं पाणिनेर अ ॥ १ ॥

**॥ इत्यष्टमोऽध्यायः ॥**

॥ श्रीः ॥

# ॥ अथ षष्ठाध्यायभाष्योपात्तसूत्रसूचिः ॥

॥ इति सूत्रसूचिः ॥